—:o:—

# सरलसंस्कृतपाठपुस्तकम् ।

—o—

भारतरत्नाद्यनेकपदवीजुषा साहित्याचार्येण अम्बिकादत्तव्यासेन

बालानामुपयोगाय

विरचितम्

काश्याम् ।

व्यासयन्त्रालये प्रकाशितम्

सं० १९५४





तृतीयवारं ... मूल्यम् ॥/)

# ॥ कथाकुसुमम् ॥



साहित्याचार्येण
श्रीमदम्बिकादत्तव्यासेन

बालानां संस्कृतभाषाभ्यासार्थं
प्रणीतं प्रकाशितं च ।

—:०:—

# KATHA-KUSUMA.

THARD EDITION.

REVISED AND IMPROVED.

BY

PANDIT AMBIKA DATTA
VYAS. S. A. B. R.
*HEAD PANDIT ZILLA SCHOOL-*
BHAGALPUR.



PRINTED BY P. G. P TIWARI VYAS PRESS-BHAGALPUR
1894





भारतरत्न पं० अम्बिकादत्त व्यास
साहित्याचार्य्य सन् १८९०

# DEDICATION.

——:o:——

श्रीहरिरव्यात् ।

श्रीमन्तः संस्कृतानुरागिविद्वांसः, बालानां शिक्षायै-
ग्राया रक्षायै, संस्कृतोन्नत्यै, अज्ञानहत्यै च सदा प्रय-
मानानां शृण्वतां भवतां छात्रैकशरणयोश्चरणयोरुप-
ारीक्रियते कुसुममेतत्, आशास्यते च यद् भवद्भिः
सादीकृत्य छात्रेभ्योऽपि वितरिष्यत इति ॥

ातिकशुक्लैकादश्याम्
सं० १९४४ ।

बङ्गकरसम्पुटेन
ग्रन्थकर्तृपदविडम्बनेन
श्री अम्बिकादत्तव्यासेन



॥ श्रीगणेशाय नमः ॥

—:०:—

द्वितीयसंस्करणस्य

# उपोद्घातः ॥

प्रायः संस्कृतभाषाऽभ्यासमारब्धवतां संस्कृतसुभाषितकुसुमाकरं प्रविविक्षूणां सुकुमारमतीनां बालानां सुखावबोधाय अप्रकटितदुर्घटितदुरूहपदकण्टकबेधः कोऽपि सरलग्रन्थो न प्राप्यत इति क्रियासमभिव्याहारेण व्याहृतवतां तादृशः कोऽपि निर्म्मीयतां निर्म्मीयतामिति च पौनःपुन्येनाग्रहग्रहग्रथिलतासुररीकृतवतः केषाञ्चिदार्य्यवर्य्याणामाज्ञां कुसुममालिकामिव शिरस्याधाय व्यरीरचमहं कथाकुसुममेतत् । अस्मिंश्च बालानां मनोहरा उपदेशपरिपूर्णाश्च सरलैः पदैर्निबद्धाः परिकलितलेखभाषणपरिपाटीकाश्च पञ्चविंशतिसंख्याः स्वल्पकथा उपन्यस्ताः। "आत्मन्यप्रत्ययं चेत" इत्याभाणकानुसारेण कीदृशोऽयं सन्दर्भ इति ममामोदुग्रा जिज्ञासा परन्तु अध्यापकैरुत्तमत्वेन मतः शिक्षाऽध्यक्षैश्च पठनपाठनपरिपाटीषु नियोजितः संस्कृतरसरसिकैश्चात्यन्तमादृत इत्यवलोक्य पुनर्मुद्रणस्याप्यावश्यकतेति चावधार्य्य पुनः सहृदयानां सदयानां करकमलेषु कुसुममिव समर्प्यत एतत् इति हृदयालवो दयालवो दयालवोऽद्रेकैरनुगृह्णन्तु ।

| | | |
|---|---|---|
| फाल्गुने कृष्णे ११ संवत् १९४६ | } | इत्यभ्यर्थयते ग्रन्थकारः |

## PREFACE TO THE SECOND EDITION.

In revising the book for the second impression I have simplified the diction and added copious foot notes and illustrations. As a new feature I have added a poetical version of every lessons in a form easy of being committed to memory. I am indebted to Pandit Mahesh Jha for this last improvement and to Babu Tara Pada Ghoshal, M. A, for the revision.

Bhagalpur.
the I st January 890. } *THE AUTHOR.*



# PREFACE.

My object in writing this little book is to place in the hands of the boys of the fourth form in our English Schools teaching up to the Entrance standared an easy Reader in idiomatic Sanskrit suited to their capacity. It will be the Second Book in an intended series of Readers leading up to the Entrance Course its first being my Saral Vakya, a primer not yet published, and its third my Ratnashtak now before the critics.

It consists of a number of short and interesting fables in a form especially adapted for the class of students for whom it is intended. Foot notes have been given in every case they were considered necessary and a Glossary of the words in the text has been added to be a dictionary ready at hand for preparing the lesson at home and to serve as guide in translating the pieces into English. This book and the Ratnashtak may also be used with advantage by boys of the First and Second Classes apart from their Entrance Course to acquire a fluency in Sans krit Composition that will stand them in good stead in their University Examination.

The author.




# कथाकुसुमम् ।

## प्रथमकथा ।

कश्चित् ग्रामीणो गच्छन् मार्गे पतितमेकं मुक्ताफलं प्राप । स तु तद् हस्तेन उत्थाप्य मम क्षेत्रे कोटिशो यवाः सन्ति इति किमेकेन मुक्ताफलेन इत्युक्त्वा पुनः प्रक्षिप्य प्रचलितः ।

ज्ञातार एव जानन्ति सततं गुणिनां गुणान्
हालिको(१)न विजानाति मुक्तामूल्यं कथञ्चन

[ १ ] हालिकः = हलग्राही ।

द्वितीयकथा।





कस्मिंश्चिद् वने दावाग्नि[२]मालोक्य भीतो मृगः पलायितः कस्यचिद् व्याधस्य जाले निपपात। दैवात् तस्मान्निस्सृतः कस्यचिद् भल्लूकस्य कन्दरं प्रविष्टः। तेन व्यापाद्यमान-

[२] दावाग्निम् = वनाग्निम्।

[ १ ] स्ततोऽपि पलायितः कस्मिंश्चित् कूपे निपतितः ।

भाग्यहीनो यत्र याति यान्ति तत्रैव चापदः ।

---

तृतीयकथा ।



कस्याश्चिन्नद्याः प्रवाहे कोऽपि भल्लूकः [२] पतितो जलवेगेन नीयते स्म । तं कम्बलं मत्वा कोपि ग्राम्यः सोत्फालं [३]जले पपात गत्वा च तं जग्राह । तावद् भल्लूकेनापि स गृहीतः प्राणसंशयमापेदे । तावत् तटे तिष्ठता केनापि तस्य मित्रेण कथितम् ।

[ १ ] व्यापाद्यमानः = नाश्यमानः ।

[ २ ] भल्लूकः = ऋक्षः ।

[ ३ ] सोत्फालम् = सकूर्दनम् ।

"अलं कम्बलेन तं त्यक्त्वैव समागच्छ" ततस्तेनोक्तम् "अहं तु कम्बलं त्यजामि किं तु अयमेव मां न त्यजति" ॥

---

भ्रमादपि तु दुष्टानां सङ्गं यः कुरुते जनः ।
असमर्थः पुनस्त्यक्तुं तत्रैव विनिहन्यते ॥

---oo---

चतुर्थकथा ।

कस्यचिद् वृकस्य दंष्ट्रायां किञ्चिदस्थिखण्डं लग्नमासीत् । तस्य निस्सारणाय स कञ्चित् मयूरं प्रार्थयामास यत् "यदि भवान् मम दंष्ट्रायां तिर्यक् प्रविष्टमस्थिखण्डं स्वचञ्च्वा निःसारयेत् तदऽहं किंचित् पारितोषिकं दद्याम्" स तु मयूरः पारितोषिकलोभेन तस्य मुखे स्वशिरः प्रवेश्य चञ्च्वा अस्थिखण्डं निस्सार्य तस्य व्यथां ( १ ) शमयित्वा ( २ ) पारितो-

[ १ ] व्यथाम् = बाधाम् ।
[ २ ] शमयित्वा = विनाश्य ।

षिकं ययाचे । ततः स भर्त्सयित्वा अवदत् "मूर्ख मम मुखं प्रविश्यापि तव शिरः कुशलेन निर्गतं किमतः परं याचसे ?"

---

दुष्टहस्ते पतित्वा यः कुशलेन निवर्तते ।
स हि तस्य महालाभः किमन्यैः पारितोषिकैः॥

——oo——

पञ्चमकथा ।



कस्मिंश्चित् कुञ्जे लम्बमानान् द्राक्षागुच्छान् [१] भक्षितुं कापि उल्कामुखी चिरमुत्पतन्त्यपि ग्रहीतुं न शशाक । ततः परावर्तमाना केनचित् शशकेन पृष्टा "मित्र, अपि भुक्ता द्राक्षाः ?" सा उवाच "तिक्ताः सन्ति इति परित्यक्ताः" ।

[१] द्राक्षागुच्छान् = गोस्तनीस्तवकान् ।

यत्प्राप्तुं नैव शक्नोति तद्दूषयति बालिशः ।

———○———

षष्ठकथा ।

कश्चिद् दरिद्रो वृद्धो वनात् काष्ठभारमानयन् अतिश्रान्तः (१) क्वचिद् वृक्षतले उपविष्टः खिन्न उवाच "अहो अतिदुःखितोऽस्मि कदा मे मृत्युरायास्यति?" अथ तावदकस्मात् तस्य समीपे भयङ्करमुखो मूर्त्तिमान् मृत्युरुपस्थित उवाच च "कथय, आयातोस्मि किं कथयसि ?" ततः स भयभीत उवाच "अहो न किमपि, केवलममुं भारं मे शिरसि स्थापय" इति ।

---

किंचिद् दुःखहतः पूर्वं मृत्युं वाञ्छति मानवः ।
दैवान्मृत्यौ समायाते ततो दूरं पलायते ।

[ जीविताशा दुरत्यया ]

———oo———

[ १ ] अतिश्रान्तः = स्थगितः ।

## सप्तमकथा ।



कस्यचिद् गेहे एकः पक्षी आसीत् । तस्य विष्ठायां सुवर्णमुत्पद्यते । तदध्यक्षेण तु विचारितं यत् "किं स्वल्पसुवर्णलाभेन अमुमेकदैव हत्वा एतस्य उदरस्थं सर्वं सुवर्णं प्राप्स्यामि" । अथ तेन तं हत्वा तस्य उदरे मांसरुधिराद्यतिरिक्तं किमपि न प्राप्तम् । ततो रुदित्वा भूमौ पतितः ॥

---

असन्तुष्टो जनो यस्तु करोति महतीं तृषाम् ।
दूरे तस्य महालाभो लब्धेनापि स हीयते ॥



अष्टमकथा।



कश्चित् पथिको गच्छन् मार्गं रुद्ध्वा स्थितं कञ्चिद् गर्द्दभं ददर्श। स तु अञ्जलिं बद्ध्वा वारं वारमुक्तवान् "भद्र एकतो भव, मयि गते पुनरेवं स्थास्यसि प्रसीद"। परन्तु गर्द्दभ-स्तमवलोक्यापि तथैव स्थितः। यदातुतेन दण्डमुत्थाप्य बलेन ताड़ितः, तदा मार्गं त्यक्त्वा सपदि अपससार।

"मूर्खाणामौषधं दण्डः"

---

नवमकथा।

कश्चिद् वकः कस्यचिद् हंसस्य मुखात्

मानससरोवरस्य बहुप्रशंसां श्रुत्वाप्रष्टुमारब्धवान् कथ्यतां तत्र किं किमस्तीति ।

हंस उवाच "तत्र अमृतमिव जलमस्ति, मणिमयानि सोपानानि सन्ति, मधुरगन्धीनि च कमलानि सन्ति" । ततो बकः स्मित्वा उवाच "तत्र शम्बूकाः (१) सन्ति न वा?" हंसेनोक्तं 'नहि' । ततो बकः सहीहीकारं जहास ॥

महतां महिमा मूर्खैर्न कदाप्यवगम्यते ।
अतो दोषमदृष्ट्वैव हास्यं सफलयन्ति ते ॥

दशमकथा ।

कोपि जनः आम्रफलानि कदा भक्षयिष्यामि इति चिन्तयन् तेषामेव माधुर्यं स्मरन्नासीत् । तावत् अकस्मात् केनापि

[ १ ] शम्बूका जलशुक्तयः" इत्यमरः ।

पथिकेन पृष्टः "भोः हे पञ्च दश च संकलितानि (१) कति भवन्ति ?"। स आह-"सप्तदश आम्राणि" ॥

यस्य चित्तं यत्र लग्नं तदेव स तु बोधति ।

एकादशकथा।



कोपि वृकः कस्मिंश्चित् निर्झरे जलं पातुं गतो दृष्टवान् यत् निम्नभागे एको मेषोपि जलं पिबतीति। ततस्तेन विचारितं यत् कथमपि एष हन्तव्यः। परन्तु यावदहमेतस्य समीपं यास्यामि तावदेष पलायिष्यते अतो धूर्त्ततां करिष्यामि। एवं निश्चित्य किञ्चित्

(१) सङ्कलितानि=योजितानि।

किञ्चित् चलन् उवाच "अरे मूर्ख अहं जलं पिबामि तत् त्वं कथं मलिनयसि?" तेनोक्तं "महामान्य क्षम्यतां, मदुच्छिष्टं जलं ततो न प्रवहति किन्तु भवदुच्छिष्टमेव इतः प्रवहति"। वृकेणोक्तं "किं रे मया सहवादं करोषि?' तेनोक्तं 'क्षम्यतां क्षम्यतां प्रभो'। अथ स पुनरुवाच "भद्रं,(१) क्षान्तोऽयमपराधः किन्तु वर्षं व्यतीतं तदा त्वया रे रे वृक इति कथमिवोक्तम्?" स आह "प्रभो तदा तु मम जन्मापि नासीत्"। अथ वृकः "अस्तु त्वं नासीः तदैष तव पितासीत् शत्रुपुत्रोऽपि च शत्रुरेव भवति" इति कथयित्वा तं जघान॥

---

कञ्चिद् दोषं कल्पयित्वा
घ्नन्ति (२) दीनान् जनाः खलाः॥

[१] भद्रम् = बाढ़म्।
[२] घ्नन्ति = नाशयन्ति।

द्वादशकथा ।



एकदा बहवो मूषका: सभां कृत्वा विचारयितुमारेभिरे यत् मार्जारस्य (१) उपद्रव: कथं शान्तो भवेत् । बहुविवादानन्तरं सर्वै: स्वीकृतं यत् एका घण्टानां माला तस्य कण्ठे दृढं वेष्टयितव्या यथा यदैव स आगच्छेत् तदैव घण्टानादं श्रुत्वा वयं बिलेषु प्रविशेम । तत: सर्वेषु प्रसन्नेषु एकेन वृद्धमूषकेण कथितं मयाऽपि स्वीकृतं किन्तु कथ्यतामेतत्कार्यं क: करिष्यति ?" । तत: सर्वे तूष्णीं (२) तस्थु: ।

अलं तत्र विचारेण यद्विधातुं न शक्यते ॥

[१] मार्जार: = बिडाल: ।

[२] तूष्णीम् = निभृतम् ( चुप इति भाषा )

## त्रयोदश कथा।



एकः काकः कुतश्चिदेकं मांसपिण्डमादाय कस्यचिद् वृक्षस्य शाखायामुपविष्टः। तावदेकः शृगालः ( १ ) कुतोऽपि समायातस्तरुतले स्थित्वा काकमालोक्य धूर्त्ततया तमुवाच "अहो ईदृशी रमणीया आकृतिर्मया कस्यापि पक्षिणो न दृष्टा धन्योऽहं यदद्य त्वां पश्यामि परन्तु न जाने कदा मम भाग्योदयो भविष्यति यत् तव कूजितमपि श्रोष्यामि" इति। अथ गर्वान्धः काकः काङ्कारं कर्त्तुमारेभे। तावत्तस्य मुखात् मांसपिण्डः पपात। शृगालस्तु "यादृशी तव आकृति-

[१] शृगालः=जम्बूकः।

स्तादृश एव शब्दस्तादृशी एव च बुद्धिरप्यस्ति इत्युक्त्वा मांसमादाय निभृतं जगाम ॥

अभिमानी भवत्यन्धः ।

---

चतुर्दशकथा ।

---

कस्मिंश्चिन्नगरे कश्चिन्महापराधमवगत्य राज्ञा सर्वेषां नासिका छिन्ना । दैवात् कोऽपि वणिक् व्यापारार्थी तत् नगरं प्रविष्टः सर्वानपि विघ्रानेव ( १ ) अवलोक्य चकितो बभूव । ते च सर्वे अमुं दृष्ट्वा गरुडोऽयं गरुडोऽयमुन्नसोऽयमुन्नसोऽयमिति कथयन्तः परं हास्यं कर्तुमारेभिरे । तदा स यत्रैव गच्छति तत्रैव सर्वे करताडनैर्हसन्ति । इत्यवलोक्य एकदा छुरिकया स स्वनासिकामपि चिच्छेद ।

दुष्टाः स्वदोषैराच्छन्नान्,
निर्दोषानपि कुर्वते ।

---

( १ ) 'विघ्रो विगतनासिकः' ( नकटा इति भाषा )

पञ्चदशकथा।



कस्यचिद् राज्ञो मन्त्री अतितरां बुद्धिमान् आसीत्, किन्तु मन्त्रिणः पिता महामूर्ख आसीत्। अथैकदा कैश्चित् पिशुनैः (१) राज्ञः कर्णे कथितं यत् प्रभो मन्त्रिणः पिता जीवति, यस्य च पुत्र ईदृशो बुद्धिमान् तद्विषये किं कथयामः राजा। तु तच्छ्रुत्वा मन्त्रिणमा-

[१] पिशुनः = कर्णेजपः।

कृथोक्तवान् 'कथं मम सभायां स्वपितरं नानयसि ?' स उवाच "महाराज नितान्तं वृद्ध इति नानीतः ।" राजोवाच " तथापि वारमेकमानय" । मन्त्री तु तथेति कथयित्वा गृहे आगत्य पितरमुवाच "भवता श्वो राजसभायां गन्तव्यं किन्तु कोपि किमपि पृच्छेत् भवता तु तूष्णीं स्थेयम्" । एवं शिक्षयित्वा तं परेद्युस्तत्र नीतवान् । राजा तु तमवलोक्य बहुभिरादरवचनैः स्वागतं कृत्वा बहुवारं पृष्टवान् "अपि कुशली भवान् अपि कुशली भवान्" इति । किन्तु स किमपि नोक्तवान् । ततः खिन्नो राजा मन्त्रिणमुवाच "मन्त्रिन् मूर्खेण सह कथं व्यवहरणीयम् ?" मन्त्री उवाच "महाराज ! तूष्णीं स्थेयम्" ।

—०—

विद्वत्सभासु मूर्खेण, विदुषा मूर्खमण्डले ।
तूष्णीमेव सदा स्थेयं नोचेद्भवति दुर्गतिः ॥



षोडशकथा।



कौचिद्दरिद्रौ कमाराधयाव इति विचार्य कस्याप्युपदेशात् शिवमाराधयितुं वने प्रयातौ। तत्र एकस्तु कस्यचित् पर्वतस्य शिखरे उपविष्टोऽन्यस्तु पर्वतसमीपे धरातले उपविष्टो महादेवस्य नामानि जपन् आराधयितुमारेभे। अथ दैवात् शिखरस्थस्य समीपे शिवः प्रथमं प्रकटीभूय उक्तवान् "याचस्व किमपि" इति। तेन पृष्टम् "अपि अधस्तनाय वरं दत्वा ममायातो भवान्?" शिवेनोक्तं 'नहि', ततस्तेन याचितं 'भगवन् प्रत्यहमहं स्वाभोजनपर्याप्तं श्यामाकस्य* चोदनं ससूपं सूपं (१) च लभेय'। शिवस्तु इमित्वा सोमि-

* (सांवां इति भाषा)

[१ दाल इति भाषा]

त्युक्त्वाऽधः प्रयातोऽन्यमुवाच । तेनापि पृष्टं किं शिखरस्थाय वरं दत्वा आगतोसि?' शिवेनोक्तम् "आम्" तेनोक्तं तेन किं याचितम्? ततः शिवेन सर्वं कथितं श्रुत्वा उवाच हतानि मम भाग्यानि! यन्मम याचनीयं तदेव तेन गृहीतं किमधुना याचे! तत् प्रभो गम्यताम्' ।

अल्पाशयानामल्पं हि समुदेति सदाहृदि ॥

—— ०० ——

समुद्रगकथा !

—:०:—

कस्मिंश्चिद् ग्रामे कोपि धनिकापणो जन आसीत् । स च यद्यपि दरिद्रो नासीत्तथाऽपि अन्येषां समृद्धिं दृष्ट्वा सर्वदा दुःखी भवति स्म । एकदा 'मम ग्रामे सर्वेभ्योऽधिकं धनं ममैव गेहे कथं स्यात्' इति चिन्तयन् 'रत्नाकरोऽयं समुद्रो मम मनोरथ पूरयिष्यति' इति निश्चित्य समुद्रतटे उपविष्टस्तपः

कर्तुमारेभे। निश्चयानन्तरं समुद्रो मूर्तिमानुवाच रे किं वाञ्छसि ? तेनोक्तं 'बहुधनम्, ततः समुद्रेणैका शङ्खिनी दत्ता उक्तं च 'एषा त्वं यदेव याचिष्यसे तदेव दास्यति किन्तु ततो द्विगुणं त्वद्ग्रामे सर्वेभ्यो दास्यति'। स तु तां गृहीत्वा हर्षशोकसमन्वितः स्वग्रामं गतस्तां संपूज्य लक्षं मुद्राः प्रार्थयामास। शङ्खिन्या तु तस्मै लक्षमन्येभ्योद्वे लक्षे दत्तः। अयं तु तदामुत्य चातिखिन्नोऽभूत्। एवमेव अयं यदा यद् याचते तदा ततो द्विगुणमन्ये लभन्ते स्म। ततस्तु स शोकाविष्टश्चिन्तयामास "किं करोमि अहमन्येभ्योऽधिकधनो भवितुं न शक्नोमि तद् यदि मम ग्रामे सर्वे अन्धा भवेयुस्तदहंसर्वेषां नेत्राणि अपहरेयम्" इति विचार्य अञ्जलिं बद्ध्वा (१) स शङ्खिनीं कथयामास "मातर्मम

[१] अञ्जलिं बद्ध्वा = करौ सम्पुटीकृत्य।

एकं नेत्रं विनाशय ।" ततस्तु भक्तिन्या स्वस्वभावानुसारं तस्य एकं नेत्रमन्येषां च द्वे (१) अपि नेत्रे नाशिते । ततः सर्वेषु सर्वेषु तेन सर्वेषां धनानि अपहृतानि ॥

—o—

स्वयं क्लेशं सहित्वापि ह्यौ घ्नन्ति परात्मनाम्।
न सहन्ते परोत्कर्षं प्रकृत्यैव खला नराः ॥

—oo—

अष्टादश कथा ।

कश्चिद् वञ्चकः (२) एकग्रामग्रामं गत मम निवेदितमन्नं भगवान् स्वयं भुङ्क्ते इति। स भगवतः सिंहासनस्य अधस्तात् कञ्चित् शिक्षितं नकुलं स्थापयति स्म यदा च सर्वे तस्य भक्तिमाहात्म्यं द्रष्टुं समागच्छन्ति तदा स सिंहासनस्थाय भक्ष्यां थालिकायां रक्षा

[१] ईदृशे द्विवचनं प्रयोक्तव्यमिति न संशयः ।
[२] वञ्चकः = धूर्तः ।

ङ्गानि संस्थाप्य जवनिकां (१) निपात्य घण्टां वादयति। घण्टानादं च श्रुत्वैव स नकुलः शष्कुल्यादीनां कानिचित् खण्डानि भुङ्क्ते। यदा च स पुनः 'जय जय प्रभो' इति कथयित्वा घण्टां वादयति तदा स नकुलः पुनः सिंहासनस्य अधस्तात् (२) निभृतं (३) गच्छति प्रच्छन्नस्य तिष्ठति। ये च तद् द्रष्टुं समागच्छन्ति ते तस्य भक्तिं प्रशंसन्तो बहु द्रव्यं दत्त्वा पूजयन्ति। एवं तेन बहु धनमर्जितं दूरपर्यन्तं प्रसिद्धिश्च लब्धा।

अथ दैवात् कान्यकुब्जदेशस्य महाराजेन समाहूतस्तत्र गतः। महाराजेनोक्तम् अस्मत्सन्निधौऽपि भगवतः प्रतिमास्ति, अस्या एवाग्रे बहूनि मोदकादीनि अस्माभिर्निवेद्यन्ते,

[१] जवनिकाम् = तिरस्करिणीम्।
[२] अधस्तात् = अधोभागे।
[३] निभृतम् = तूष्णीम्।

भवान् भगवन्तं भोजयतु । तेनोक्तं "न तथा, मत्पूजितायामेव मूर्तौ मम भक्तिः" । अथ राज्ञा कथितम् "अस्तु स्वमूर्तिरपि भवता अत्रैव आनेयः" तेन च बाढ़ (१) मित्युक्त्वा तत्रैव स्वमूर्त्तिरानीता किन्तु राज्ञा तथा प्रबन्धः कृता यथा नकुल मानेतुं न शशाक (२)। ततो राज्ञा (३) बहु नैवेद्यादिकं स्थापयित्वोक्तं 'भोजय भगवन्त' मिति। स तु भयभीतो जवनिकां पातयित्वा नेत्रे निमील्य (४) भगवन्तं ध्यायन मनसैव प्रार्थयामास भगवन्नहं महापराधी वञ्चकोऽस्मि, श्रुतं भवानपराधिनोपि दयते इति, तत् प्रभो दयस्व स्वयं किमपि भुङ्क्ष्व अन्यथा मम शिरश्छेदो

१ बाढम् = एवमस्तु ।

२ शशाक = समर्थो बभूव ।

३ राज्ञा = भूपतिना ।

४ निमील्य = मुद्रयित्वा ।

भविष्यति" इति कथयन् तन्मय इव करोद। भगवांस्तु क्षणिकेनापि सत्येन प्रेम्णा (१) परितुष्टः (२) स्वयं किञ्चिद् बुभुजे (३) जवनिकायामपसारितायां [४] राजा तत्तथावलोक्य वञ्चकस्य चरणयोर्निपपात ।

अपराधान् सुबहुनान् विस्मृत्यक्षणमात्रतः।
अत्यल्पसत्यया भक्त्या प्रीयते परमेश्वरः ॥

---

ऊनविंशकथा।

---

कश्चित् मूर्खो वणिक् कं पूजयामीति चिन्तयन् पत्नी[५]रत्यहमन्नं ददाति इति इयमेव ममेष्टदेवतेति निश्चित्य तस्या एव चरणौ

---

१ प्रेम्णा = स्नेहेन।
२ परितुष्टः = प्रसन्नः ॥
३ बुभुजे = भुक्तवान्।
४ अपसारितायाम् = दूरीकृतायाम्।
५ पत्नी = स्त्री।

प्रत्यहं पूजयति स्म। अथ कदाचित् कोऽपि महात्मा आगत्य तं प्रोवाच 'मूर्ख त्वं पत्नीं पूजयसि कामात्। भगवन्मूर्त्तिं पूजय यथा भगवान् प्रसीदेत् [१]।' तेनोक्तं कथ्यतां कां पूजयामि, स तु काञ्चन स्वल्पां [२] पाषाणमयीं गणेशमूर्त्तिं दत्त्वा प्रोवाच



पूजयेमां गणेशमूर्त्तिमिति,। स तु बाढमित्युक्त्वा। प्रत्यहं तामेव पूजयितुमारेभे अथैकदा रात्रौ कोऽपि मूषकः शनैः शनैरागत्य तां मूर्त्तिं स्वबिले निनाय। अन्येद्युस्तां

१ प्रसीदेत् = प्रसन्नो भवेत्।
२ स्वल्पाम् = लघ्वीम्।

मूर्त्तिं तव दृष्ट्वा 'अहो इमे एव गणेशादपि बलवन्तः' इति इमे एव पूजनीया, इति मोदकाद्यर्पणेन मूषकानेव पूजयितुमारेभे ।



अथैकदा एकं मूषकं कोपि विडालो [१] जग्राह । इत्यवलोक्य 'अहो ततोऽपि बलवानयमित्ययमेव मम इष्टदेवः' इति निश्चित्य दुग्धदानादिना तमेव सेवितुमारेभे । एकदा च केनचित् शुनकेन [२] विभीषितो



[१] विडालः = मार्जारः ।
[२] शुनकेन = कुक्कुरेण ।

विडालोऽपि दूरं पलायितः, तदवलोक्य स शुनकमेव इष्टदेवं मत्वा तमेव दध्योदनादिना अर्चितुमारेभे। तत एकदा क्रूरं शब्दायमानं कुक्कुरं वणिक्पत्नी दण्डेन प्राहरत् [१]



वणिक् तदवलोक्य 'अहो व्यर्थमितस्ततःपलाये सर्वेषामधीश्वरी एषैव ममेष्टदेवता, इति चिन्तयन् तदग्रे साष्टाङ्गं निपपात।

अल्पया शिक्षया मूर्खं,
को नु शिक्षयितुं (२) क्षमः।
स तु कालान्तरे (३) भूयः।

१ प्राहरत्—अताडयत्।
२ क्षमः—समर्थः।
३ भूयः—पुनः।

प्राप्नोति प्रकृतिं (१) निजाम् ॥

विंशकथा ।



( रामचन्द्रस्य मन्दिरम् । )

कोऽपि निर्जीविकोदरिद्रो ब्राह्मणः कस्मिं-
श्चित् रामचन्द्रमन्दिरे वाल्मीकिरामयणस्य

१ प्रकृतिम् – स्वभावम् ।

कथां कथयन्नेकं वर्षं यापयामास। ततो रामचन्द्रो भगवान् हनूमन्तमकथयत् "मारुत! ब्राह्मणोऽयं प्रतिदिनं मम चरित्रं रटति, किन्तु अस्मै कोऽपि किमपि न ददाति तद् यथाऽयं सहस्रं मुद्रा लभेत तथा भवता यतनीयम्"। हनूमांस्तु अञ्जलिं बद्ध्वा प्रणम्य स्वीकृतवान्। दैवात् कोऽपि धूर्त्तस्त-

स्मिन्नेव समये दर्शनं कर्तुमायात आसीत्। स तु प्रतिमारूपयोरप्यालपतो रामचन्द्र-हनूमतोरिमां वर्तां शुश्राव। अथ निवर्त्त-मानः स विचारयामास। " अहो श्रीराम-चन्द्रेणोक्तं हनूमता च स्वीकृतं तदवश्यमेव ब्राह्मण एष कथंचित् सहस्रं मुद्राः प्राप्स्य-ति। ब्राह्मणस्तु न जानाति तंदस्मै अहं

दत्त्वा सर्वं धनमहमेव ग्रहीष्यामि” इति विचार्य्य ब्राह्मणस्य समीपे गत्वा उक्तवान्। “विद्वन् कथ्यतां, रामायणस्य व्याख्यायाः कदा समाप्तिर्भविष्यति ?” स उवाच “परश्वो भविष्यति किन्तु श्रोतारो वहवो न सन्ति इति दक्षिणाया आशा नास्ति ?” धूर्त्तेनोक्तम्। “भगवन् एवं चेत् कथ्यतां कोपि उद्योगः क्रियेत। किन्तुमह्यं किं दास्यते तत् प्रतिज्ञायताम्।” ब्राह्मणेनोक्तं “मम मते तु सर्वं संकलय्य शतमपि मुद्रा न भविष्यन्ति। तथापि यदि भवानधिकार्थं यतेत तद्भवानेव कथयतु मया किं देयम्” धूर्त्तेनोक्तम् “अहं तथा यतिष्ये यथा भवता सहस्रं मुद्राः प्राप्येरन् किन्तु तदर्द्धं मह्यं देयम्”। तच्छ्रुत्वा प्रसन्नेन ब्राह्मणेनोक्तम्। “तन्मया स्वीकृतम्” द्वितीयेऽहनि धूर्त्तेन मुद्राणां पञ्चशती तस्मै दत्ता उक्तं च यत्

"गृह्यतामेष मुद्रानिचयः श्वस्तु भवता य-
त्प्राप्स्यते तत् सर्वं मदीयम्"। ब्राह्मणस्तु
मुद्राझणत्कारेणैव हृतहृदयः सानन्दं स्वी-
कृत्य मञ्जूषायां मुद्राः स्थापितवान्। अथ प-
रेद्युर्धूर्त्तोऽपि ब्राह्मणेनसह मन्दिरं प्रविष्टः।
ब्राह्मणेन च कथा समापिता परन्तु तस्मिन्
दिने कोपि श्रोता नायातः। अतो ब्राह्मणेन
कापि दक्षिणा न प्राप्ता। ततस्तु धूर्त्तस्या-
ग्रहेण घटिकां यावद् उपविश्य ब्राह्मणेनोक्तं
"कथय कियत्कालं स्थास्यामि"। तेनोक्तं
"भगवन् हतं मम भाग्यैस्तद् भवता यथे-
च्छं (१) गम्यताम्। अथ ब्राह्मणे प्रयाते
धूर्त्तो मन्दिरं प्रविश्य हनूमन्तम् "अरे त्वं
मत्तोऽपि धूर्त्तोसि यः सर्वं ग्रससि," इत्युक्त्वा
चपेटिकया प्राहरत्; तदा तस्य हस्तस्तत्रैव
दृढं लग्नो बभूव। ततस्तं व्याकुलं दृष्ट्वा

१ यथेच्छम्—इच्छामनतिक्रम्य।

हनूमानुवाच "मूर्खं वयं त्वयं न दद्मः किंतु दापयामस्तत् जीवितुमिच्छसि चेत् तस्मै पुनरन्यां पञ्चशतीं देहि यथा स सहस्रं मुद्रा लभेत"। ततः स भयेन "दास्यामि दास्यामि" इति प्रतिज्ञाय मुक्तहस्तः समागत्य पुनस्तावतीर्मुद्रा दत्वा ब्राह्मणं प्रणनाम।

परस्य लाभाद् योधूर्त्तस्मादातुं स्वयमिच्छति।
तस्य लाभस्तु दूरेस्तु भवति द्विगुणा क्षतिः॥

एकविंशकथा।



कस्मिंश्चिद् ग्रामे कोपि भूस्वामी षल्य-

न्तमतिथिप्रिय आसीत्। दैवादेकदा वर्षर्त्तौ तस्यालये बहवो यात्रिणः सायंसमये समायाताः। तेन स्थानादिकं निर्दिश्य सर्वेभ्यो विविधानि अन्नानि पाकपात्राणि च दत्तानि। किन्तु तस्मिन् दिने बहु अन्विष्याऽपि तेन इन्धनानि न प्राप्तानि। ततस्तस्मिन् महान्धकारे चिन्ताकुलोलवित्रं ( १ ) गृहीत्वा स्वयमेव ग्रामाद् वहिर्निर्जगाम, किन्तु छेदनार्थं शुष्कं वृक्षं न प्राप। ततः किञ्चित् कालीमन्दिरमासाद्य तेन विचारितं यद् अद्य एतस्यैव कपाटं विच्छिद्य अतिथीनामिन्धनकार्यं साधयामि पुनश्च कालान्तरे देवीद्वारमपि परिष्करिष्यामि। इति विचार्य स कपाटं भित्त्वा काष्ठखण्डानि अतिथिभ्यः समदात्। द्वितीयेऽहनि ग्रामे "मन्दिरकपाटं केन भग्नं" इति महाकलकलो जातः।

१ लवित्रम्—दात्रम्।

अथ केनचित् तद्ग्रामवासिना दुष्टेन चिन्तितं यदहो अवशिष्टानि कपाटानि अहमपि छित्वा आनेष्यामि को जानीते केन किं कृतमिति ।

अथ सर्वत्र महान्धकारे व्याप्ते रात्रौ लवित्रमादाय सोऽपि तत्र गत्वा अन्यद्वारलग्नानि कपाटानि भेत्तुमुद्योगं चकार । किन्तु लवित्रप्रहारसमकालमेव महाकाली प्रकटीभूय सगर्जनं तं निपात्य तस्य वक्षसि आरूढा । ततस्तमात्तनादेन रोदसी पूरयन्ती काली उवाच "मूर्ख मम जीर्णं मन्दिरमुद्धर्तुं कपाटानि च नूतनीकर्त्तुं प्रतिजानीहि, अन्यथा तव शोणितमधुनैव पास्यामि" ।

अथ स भयभीत उवाच "मातः सर्वं करिष्यामि प्रतिमासं च महत्या सामग्र्या पूजयिष्यामि किन्तु मां जीवन्तं त्यज । भगवती तु "प्रतिज्ञां भङ्क्ष्यसि चेत् सकु-

टुम्बो नङ्क्ष्यसि' इत्युक्त्वान्तरधात्, स तु महता व्ययेन देवीमन्दिरं परिचस्कार।

—॰॰—

परार्थचिन्ताशुद्धेषु तोषं दधति देवताः।
स्वार्थदूषितचित्तेषु रोषं दधति देवताः॥

——

द्वाविंशकथा।



कश्चिद् धूर्त्तः कश्चिच्छुकम "अत्र क
सन्देहः" इत्येव स्पष्टं शिक्षयित्वा तं वि
क्रेतुं कस्मिंश्चित् नगरे प्रविष्ट इतस्त
भ्रमन् कस्यापि धनिकस्य द्वारदेशमाग
संदेशं प्रेषयामास, यत् सर्वशास्त्रपार

शुको विक्रीयत इति। अथ स महाधनो धनिकोऽपि तद् वृत्तान्तं श्रुत्वा आकार्य्य, शुकस्य रजतपीठिकां सुवर्णनूपुरं च दृष्ट्वा जातविश्वासः सोत्साहम् पप्रच्छ "कथ्यतां किमस्य मूल्यमिति"। तेनोक्तं "लक्षं मुद्राः" अथ तत्रत्यैरन्यैस्तेन धनिकेन च कथितं "भो बहुमूल्यं वाञ्छसि युक्तं कथय" स तु कथयामास "किमनेन शुक एवार्थं पृच्छ्यताम्, । एष एव प्रमाणम्"। अथ तेन धनिकेन पृष्टम् "शुक, किं सत्यमेव ते मूल्यं लक्षं मुद्राः ?" शुक उवाच "अत्र कः सन्देहः ?"

तच्च अतिस्पष्टं सुस्वरं सुमधुरं च भाषणमाकर्ण्य ते सर्वे अतिप्रसन्ना जाता धनिकोपि च विश्वाससमापन्नः पुनरपृच्छत् "तत्किमहं लक्षमेव मुद्रा दद्याम् ?" ततः स पुनरुवाच "अत्र कः सन्देहः" इति। ततस्तु एकेनैव वचनेन प्रश्नद्वयमुत्तीर्णम्, इति

चकितः प्रसन्नश्च धनिकः अपरीक्ष्यैव तस्मै लक्षं मुद्रा दत्त्वा शुकं क्रीतवान् ।

धूर्तेन च विक्रीया मुद्रा गृहीत्वा कथितं "प्रभो एष किञ्चिद् दाडिमादिकं भक्षयतु पिबतु च दुग्धादिकं तत एतेन आलपतु भवान्" । धनिकेन तु बाढमित्युक्त्वा तत् प्रबन्धं भृत्यहस्ते समर्पितः । धूर्त्तस्तु धन्यो भवान् गुणग्राहीति कथयन् निभृतं निवृत्तते।

अनन्तरं समयान्तरे मित्रैः परिवृतो धनिकः शुकमानाय्य वामहस्ते उपवेश्य दक्षिणहस्तेन तस्य पृष्ठं परिमृशन् सादरमुवाच "कथयतु का भवतो (१) जनिभूः"? शुकस्तु किमपरं कथयेत् पुनः, कथयामास "अत्र कः सन्देहः" इति । ततश्चकितेषु सर्वेषु तेन पृष्टं "ननु भोः पृच्छामि क[illegible]

१ जनिभू—जन्मभूमिः ।

भवतो जनिभूः"? इति। तेन तु पुनरुक्तम् "अत्र कः सन्देहः" ? । ततः स उक्तवान् "इदं तु असम्बद्धं भाषसे" शुक उवाच "अत्र कः सन्देहः"स उवाच "मन्ये एतावदेव अभ्यस्तं (१) भवता"। शुक उवाच "अत्र कः सन्देहः । स उवाच "तत्किं मम लक्षं मुद्रा नष्टाः"? शुक उवाच "अत्र कः सन्देहः" स उवाच "अहो महामूर्खो ऽहम्"। शुक उवाच "अत्र कः सन्देहः"। तदा स धनी अतिशोके पतितः।

पूर्वं परीक्ष्य कर्तव्यः संग्रहो गुणिनां जनैः।
अपरीक्ष्य नरो गृह्णन्नन्ततः परिशोचति ॥

त्रयोविंशकथा।

कस्मिंश्चिन्नगरे कोऽपि महाधनः श्रेष्ठी प्रतिवसति स्म। एकदा रात्रौ तस्य पत्नी

१ अभ्यस्तम् = रटित्वा मुखस्थं कृतम्।

तमुवाच "अहो इयमस्मत्प्रतिवेशिनी (१) महाशूद्री (२) दरिद्रापि प्रतिरात्रि (३) शष्कुलीः पचति। अस्माकं तु गृहे एतावद् धनमस्ति तथापि सूपौदनमेव पच्यते किमेतत्"? तच्छ्रुत्वा विहस्य श्रेष्ठिना कथितम् "अये एषां एतत्पतिश्च अधुनापि नवनवतिचक्रे न पतितौ स्तः, अन्यथा क्व शष्कुली क्व च अपूपम्"! ततः सा जगाद "स्वामिन् किमिदं नवनवतिचक्रम्, एतत् तु मया कदापि न श्रुतम्?" स उक्तवान् "अस्ति किञ्चित्"। अथ पुनः सा साग्रहम् अब्रूत "कथ्यतां कथ्यतां किमिदं नवनवतिचक्रम्?" स तु उवाच "प्रिये तदिदं नवनवतिचक्रं यस्मिन् पतितो बहुधनोऽपि उत्तमानि वस्त्राणि न

---

१ प्रतिवेश्मिनी = प्रतिवेशिनः पत्नी (पड़ोसिन इति भाषा)

२ महाशूद्री = आभीरी।

३ शष्कुली = (पूरी इति भाषा)

परिदधाति, मधुराण्यन्नानि न भुङ्क्ते, विमलानि भूषणानि न धारयति, सुभगानि सौधानि ( १ ) च न निर्माति, किमधिकमस्मिन् चक्रे पतितस्य सदा भग्नाखट्वा अस्नेहमधुर आहारः, मलिनानि सच्छिद्राणि वासांसि, जीर्णानि, ( २ ) शीर्णानि ( ३ ) च पत्राणि भवन्ति । यदि द्रष्टुमिच्छसि महात्मामेतच्चक्रस्य तदानय नवनवतिं मुद्राः। सा तु कौतुकदर्शनविह्वललालसा झटिति तावतीर्मुद्रा आनिन्ये । तत्पतिश्च सपदि ता वस्त्रखण्डे बद्ध्वा स्वप्रतिवेशिन्याश्छदिषि ( ४ ) चिक्षेप ।

अथान्येद्युः प्रातरेवोत्थायाभीरेण, दृष्ट्वा, निभृतं पोटलिकामुत्थाप्य, बन्धनमुन्मोच्य मुद्रा

१ सौधानि = प्रासादान् = गृहाणि ।
२ जीर्णानि = पुरातनानि ।
३ शीर्णानि = जर्जरितानि ।
४ छदिः = पटलम् (छप्पर इति भाषा )

गणयित्वा भार्य्यायाः कर्णे सर्वो वृत्तान्तः कथितः। भार्य्यया च "इदं भाग्यमेवावयोर्मूर्तिमदस्ति" इति कथयित्वा विचार्य पुनः कथितं "नाथ इदमेकोनं शतमस्ति तत् कथंचित् एका मुद्रा अन्याप्यर्जनीया यथा इदं पूर्णं शतं स्यात्"। स बभाषे किं कठिनम् अहं मुद्रिकायाश्चतुर्थांशं प्रत्यहं पाषाणोद्वहनभृतिं प्राप्नोमि। यदि त्वं तदर्द्धेन भोजनकार्यं निर्वहेः अर्द्धं च शेषयेस्तद्दिनाष्टकेनैव मुद्रा सम्पन्ना स्यात्। तया चोक्तं "स्यादेवं माभूच्छष्कुली [१] शक्तुकं (२) चिपिटमेव वा भक्षयिष्यावः"। एवं सम्मन्त्र्य उभाभ्यां तथैव कर्त्तुं प्रारब्धम्। पुनरेकदा श्रेष्ठी स्वपत्नीं पप्रच्छ "कथय अधुना तव प्रतिवेशिनी शष्कुलीः पचति न वा"। सा

१ शक्तुकम् = भर्जितधान्यचूर्णम् ( सत्तू इति भाषा )
२ चिपिटम् = पृथुकम् ( चूड़ा इति भाषा )।

च मन्दं स्मित्वा भाषितवती "अहं भूयो भूयो गवाक्षात् पश्यामि, किन्तु यदारभ्यैताभ्यां मुद्राः प्राप्तास्तदारभ्य उभौ कर्णौ कर्णौ न जाने किं क्षणं क्षणे आलपतः शक्तुभोजनेन च दिनानि यापयतः"।

अथ कालेन शतसङ्ख्यायां पूर्णायां ताभ्यां विचारितम् "अहो दृश्यतामावयोर्मूर्खता एवमावाभ्यां धनं न सञ्चितम् अधुना तु अलं शष्कुल्यपूपादिभिः' धनमेवार्जयिष्यावः"। श्रेष्ठिना च भार्य्यया आलप्य उक्तम्, पश्य इदमेव नवनवतिचक्रमस्ति ॥

" यथालाभस्तथा लोभो
लाभाल्लोभः प्रवर्त्तते " ।



## चतुर्विंशकथा।

——००——

कस्मिंश्चिद् देशे कोऽपि राजा हंसानां महतीं प्रशंसां श्रुत्वा बहून् (१) दूरचरान् भृत्यानाहूय उवाच "अहो कथमपि कोऽपि हंस [२] आसादनीयः"। ते च सर्वे स्वीकृत्य दिक्षु गताः। अथ राज्ञा पटहो घोषितो यद् "य एव कुतोऽपि हंसमाप्नुयात् स राजसभायामानयेत् तर्हि तस्मै महापारितोषिकं दास्यते"। ततोऽन्येऽपि (३) परःसहस्रा जनाः पारितोषिकलोभेन इतस्ततः प्रचलिताः किन्तु बहुभिरपि वर्षैस्तेन राज्ञा कोऽपि हंसो नासादितः। अथैकदा सभायामुप-

१ दूरचरान्=दूरपर्यन्तं गन्तुं शीलं येषाम्।
२ आसादनीयः=प्रापणीयः।
३ परःसहस्राः=सहस्राधिकाः (परःशताद्यास्ते येषां परा सङ्ख्या शतादिकात्)

विश्य राजा चिन्तयितुमारेभे "अहो कोटिशः पक्षिणः सञ्चरन्ति किन्तु स एव न लभ्यते यो मुक्ताफलान्यत्ति ( १ ) लङ्घनं ( २ ) वा करोति, यश्च एकत्र मिश्रितमपि नीरं क्षीरं [ ३ ] च पृथक् करोति । अपि कोऽपि गुणी समायास्यति यो मां कञ्चिदुपायं निर्देक्ष्यति [ ४ ] । " ?

एवं चिन्तयत एव तस्य दैवात् कश्चित् महात्मा मुनिः समायातः । राज्ञा तु सादरमुपवेश्य पादप्रक्षालनादिना पूजितः कुशलप्रश्नाद्यनन्तरमुवाच । " राजन् कथं चिन्ताक्रान्तोसि ? महती ते सम्पत्, प्रसन्नाः प्रजाः, सदाचाराः पुत्राः, विश्वासयोग्या भृ-

१ अत्ति = भुङ्क्ते ।

२ लङ्घनम् = उपवासम् ।

३ क्षीरम् = दुग्धम् ।

४ निर्देक्ष्यति = उपदेक्ष्यति ।

त्याः, दुर्धर्षाणि ( १ ) बलानि" ( २ ) शरीरमरोगं, विद्वांसश्च सहचराः सन्ति; तन्न पश्यामि ते दुष्प्रापं किमपि । किन्त्वत्र चिन्ताकारणम् ? ततोऽञ्जलिं बद्ध्वा राजोवाच "भगवन् सर्वं सम्पन्नं भवति भवदनुग्रहपात्राणां [ ३ ] तथापि हंसाख्यस्य पक्षिणः प्रशंसां श्रुत्वा तमेव प्राप्तुं चिरं यते किं तु अधुनापि न प्राप्तवान् कथं च प्राप्स्यामि, इति चिन्तया एवोद्विग्नं ( ४ ) मे चेतः ।"

ततो मुनिना कथितं श्रूयतां हंसा एवं सर्वत्रैव न मिलन्ति, यत्र च मानसरोवरे ते मिलन्ति तत्र केषामपि गतिरेव न भवति । तथापि त्वं ( ५ ) प्रत्यहमन्नदानैः सर्वानेव

१ दुर्धर्षाणि = दुःखेन धर्षयितुं शक्यानि ।
२ बलानि = सैन्यानि ।
३ भवदनुग्रहपात्राणाम् = भवत्कृपापात्राणाम् ।
४ उद्विग्नम् = विक्षुब्धम् ।
५ प्रत्यहम् = प्रतिदिनम् ।

पक्षिणास्तोषय तथा पक्षियूथसहकारेण ( १ ) कोऽपि कदापि हंसोपि समागच्छेत् इति सम्भाव्यते । राजा तु तत् स्वीकृत्य क्षणान्तरे मुनिं विसृज्य, तामेव क्रियामारभत । अथ कालान्तरेऽन्नकणलोभेन परःसहस्राः पिकाः, शुकाः, सारसा, वकाः, कारण्डवाः, ( २ ) सारिका, मयूराश्च तत्रागन्तु मारेभिरे। राजा च भृत्यान् हंसलक्षणमुक्त्वा आदिदेश यत् "यदि कोपि ईदृशः पक्षी समागच्छेत् तत् सपद्येव अहं सूचनीयः" ।

अथैकदा लक्षावधिषु पक्षिषु शालिच-णकमसूरनीवारादिकणानास्वादयत्सु, विचि-त्रैश्च बहुविधैर्मधुरैः कूजनैर्दिगन्तं पूरयत्सु, कश्चिद् राजभृत्यः कस्यचिद् वृक्षस्य शाखायां यथोक्तलक्षणाक्रान्तं किंचित् पक्षियुगलं

१ पक्षियूथसहकारेण = पतगसमूहसाहचर्येण ।
२ कारण्डवाः = जलाश्रयाः पक्षिविशेषाः ।

ददर्श, तत्क्षणमेव च राज्ञे निवेदयामास राजा तु झटित्यागत्य हंसाविमाविति निश्चित्य (१) मुक्तामुष्टिं चिक्षेप । यदा तु तौ भूतले आगत्य मुक्ता भक्षयितुमारब्धवन्तौ तदा राजा प्रणनाम। उवाच च अहो दुर्लभं भवतोर्दर्शनं यदद्य भाग्यबलेन मया प्राप्तम्। ततो हंसेन कथितं "राजन् किं दुर्लभं यदि सर्वान् (२) प्रीणयसि तत् परमेश्वरमपि (३) द्रक्ष्यसि किं मादृशैः"।

प्रीणयेदखिलानेव, यदीच्छेच्छुभमात्मनः ।
कोजानातिकदाकुत्र, किंरूपोमिलतिप्रभुः ॥

१ मुक्तामुष्टिम् = मुष्टिपरिमिता मुक्ताः ।
२ प्रीणयसि = प्रसादयसि ।
३ द्रक्ष्यसि = अवलोकयिष्यसि ।



पञ्चविंशकथा।

कश्चिद् वृद्धो वैश्यः पुत्त्रेण सहितः कञ्चि-द्दश्वं विक्रेतुं प्रचलितः। तयोर्मध्ये पितुर्वयः



पञ्चाशद्वर्षाणि, पुत्त्रस्य तु अष्टादश वर्षाणि आसीत्। एवं तौ द्वावपि अभितो (१) हयस्य पृष्ठे हस्तं दधानौ कंचिद् ग्रामं प्रविष्टौ तावत् तत्र कस्यचित् तडागस्य स-मीपे जलमुद्वहन्तौ भिर्वद्धाभिः स्त्रीभिः क्रीड़-न्तीभिर्वालिकाभिश्च विहस्य उक्तम् "अहो

१ अभितः—उभयतः।

पश्यत मूर्खतामेतयोः यौ सत्यपि सुन्दरे हये (१) स्वेदाक्लिन्नौ पादाभ्यां चलतः"।

तदाकर्ण्य वृद्धः सपदि हयपृष्ठे स्वपुत्रमारोपितवान्, यावच्च अग्रे किञ्चिद् ग्रामान्तरं गच्छन् आसीत् तावत्, क्षेत्रप्रान्ते उपविश्य गोष्ठीं कुर्वतः कांश्चिद् वृद्धान् गोपान् ददर्श। ते तु दृष्ट्वैव कथयामासुः "अहो पश्यत मूर्खतामेतस्य बालकस्य यो वृद्धं पितरं भूमौ विसृज्य स्वयं हयमारुह्य याति, धिक् चैनं मूर्खं य (२) आसन्नमृत्युरपि एवं पुत्रं (३) लालयति"।

तदाकर्ण्य स बालः सपदि अश्वात् (३) दुत्प्लुत्य पितरमारोपयामास। किंचिदग्रे गत्वा ताभ्यां क्रीडन्तो बहवो बालका,

१ स्वेदाक्लिन्नौ = खिन्नौ।
२ आसन्नमृत्युः = किञ्चितपरिशिष्टजीवितः।
३ लालयति = लाड्यति।
४ उत्प्लुत्य = सकूर्दनमवतीर्य।

उपविश्य परस्परमालपन्त्यः [ १ ] क्रोडार्पित-स्तनन्धयाः स्त्रियश्च दृष्टाः । तैस्ताभिश्चोक्तं "पश्यत पश्यत मूढ़तामेतस्य यः कोमलाङ्गं बालकं पादचारेण गच्छन्तं श्रान्तं च पश्यन्नपि ( २ ) घोटकमारुह्य चलति" ।

तच्छ्रुत्वा वृद्धः स्वसमीपे स्वपुत्त्रमपि उपवेशयामास, एवं पुनरग्रे प्रचलितौ । तावदग्रे कस्याश्चित् नद्याः ( ३ ) सेतोः प्रान्ते समागत्य गच्छन्त आगच्छन्तश्च बहवो जना दृष्टाः । ते तु इमौ दृष्ट्वैव प्रोचुः "पश्यत, यौ द्वावपि सहैवारुह्य ( ४ ) वराकमेनं पशुं मारयतः ।

तदाकर्ण्य तौ सपदि हयपृष्ठं त्यक्त्वा भूमौ स्थितौ चिन्तयितुमारेभाते यद् "अधुना

१ क्रोडः = उत्सङ्गः ।
२ घोटकम् = हयम् ।
३ सेतोः = आलेः ।
४ वराकम् = दीनम् ।

किं करणीयं सर्वैस्तु प्रकारैरावां चलितौ अधुना तु अश्वमेव कथमपि उत्थाप्य (१ वक्ष्याव: ” ।

तौ तु अश्वं बध्वा वोढुं प्रयतमानौ दृष्ट्वा कोऽपि वृद्ध उवाच “अरे युवां सत्यमेव महामूर्खौ स्थ:, यौ स्वसौकर्यमदृष्ट्वा तुच्छानां वार्तासु कर्णौ दत्थ:, सर्वतोषणं महाकठिनमस्ति एवं करणे तु अश्वोऽपि मरिष्यति तद् यथेच्छं गच्छतम् ” । ततस्तौ चिन्तां परित्यज्य यथेच्छं चलितौ ॥

---

[ २ ] “पिण्डे पिण्डे मतिर्भिन्ना ( ३ ) तुण्डे तुण्डे सरस्वती ” ॥ अतस्तोषयितुं सर्वान्, क: ( ४ ) क्षमेत नरो भुवि ॥ प्रीणयेदखिलानेतत् सत्यं यदपि वर्त्तते ॥

---

१ वक्ष्याव: = नेष्याव: ।

२ पिण्डे = शरीरे ।

३ तुण्डे = मुखे ।

४ क्षमेत = समर्थो भवेत् ।

तथापि तु विचार्यैव प्रीणयेदखिलान् नरान् ॥
नीतेर्विरुद्धं यत्कार्यं न तत् कार्यं कथंचन ॥
धर्ममूलं युक्तिमूलं सदा कार्यं समाचरेत् ॥
इति ।





एकोनविंशशतके वेदवेदोत्तरे वरे । (सं० १९४४)
पक्षे वलक्षे कार्तिक्रिके वैक्रमेऽस्मिन् सुवत्सरे ।
अङ्गदेशे पुरे धन्ये मान्ये देवनदीतटे ।
चम्पानगर्या निकटे कविकोविदकीर्तिते ॥
अम्बिकादत्तगौडेन विद्वच्चरणसेविना ।
प्रणायि बालबोधार्थं कथाकुसुमकं मया ॥



## LIST OF ABBREVIATIONS:—

अ—अव्ययम् An Indeclinable.
पुं—पुंलिङ्गम्—Masculine.
स्त्री—स्त्रीलिङ्गम् Faminine
द्वि—द्विलिङ्गम् Masculine and feminine
न—नपुंसकलिङ्गम् Neuter.
त्रि—त्रिलिङ्गम् Masculine feminine and neuter.
क्रि—क्रियापदम् A Verb.
क्रि॰ वि—क्रिया विशेषणम् Adverb.
धा—धातुः Root.
नि—निपातः Irregularly formed.
बहु—बहुव्रीहिः।
तत्पु—तत्पुरुषः।
कर्मधा—कर्मधारयः।
P.—परस्मैपदम्। or Person.
A.—आत्मनेपदम्।
C.—Conjunction.



# GENERAL GLOSSARY.



अकस्मात् – अ. By chance.

अखिल—त्रि, All, entire.

अग्र—त्रि. Chief, first, front &c अगि to go+रन्

अञ्जलि—पुं. A cavity formed by putting the hands together, अञ्ज to go+लिच्

अत:—अ. So, from this एतद्+तसिल्

अतिकृपण—त्रि, Very miserly. A great miser. अति+कृप्+ल्युट्

अतिखिन्न—त्रि, Much wearied; knocked up अति+खिद्+क्त

अतितराम्—अ. Much. exceedingly. अति+तराम्

अतिथिप्रिय—त्रि, Friend of guests; one who [treats his guests; well.] अतिथि+प्रिय तत्पु०

अतिशोक—पुं, Great Sorrow. अति+शुच्+घञ्

अतिश्रान्त—त्रि, Much wearied, fatigued or knocked up. अति+श्रम्+क्त

अतिसुरभि—त्रि, Very sweet-smelling. अति× सु×रभ्×इन्

अतिस्पष्ट—त्रि, Very clear अति×स्पश्×क्त

अत्ति—क्रि, 3rd P. S. He eats अद् to eat 2 C. P. अत्ति, अत्तः, अदन्ति &c.

अत्यन्त—त्रि, Much, excessive. अति × अन्त

अत्यन्तसत्य—त्रि, Quite true. अत्यन्त + सत्य

अत्र—अ, Here; in this place.

अथ—अ, After, moreover, then further, now, &c. अर्थ + ड. र is dropped.

अदृष्ट्वा—अ. Without seeing. नञ् × दृश् × क्त्वा

अद्य—अ. To-day, now.

अधः—अ. Down, down—ward. अधर × असि

अधस्तन—त्रि० That is below, underneath, or at the bottam. अधस् ट्यु ल्

अधस्तात्—अ. Down, dawnwards. अधर × अस्ताति

अधिकधनिन्—त्रि० Very rich. अधिक × धन् × इन्

अधिकार्थ—त्रि० Of more use, when adverb For some more use. अधिक + अर्थ

अधीश्वर—त्रि० Superior, lord, over-lord. अधि + ईश्वर.

अधुना—अ० Now इदम् + अधुना

अधोभाग—पुं० Lower part, The bottom अधस् + भाग

अनुग्रहपात्र—न॰ Favourite, one deserving of favour. अनुग्रह+पात्र.

अन्ततः—Lastey, from the end, at the end. अन्त+तस्

अन्तर्धा—धा To disappear. अन्तर, अ॰ with-in ×धा to hold अन्तर्दधाति, अन्तरधात् &c.

अन्ध—त्रि॰ Blind. अन्ध+अच्

अन्न—न॰ Corn. अद्+क्त

अन्नकणलोभ—पुं॰ Greediness for graing of corn [अन्न+कण+लोभ+तत्पु॰]

अन्य—त्रि॰ Other, different. [अन्+यक्]

अन्यद्वारलग्न—अ॰ Attached to another door. अन्य+द्वार+लग्न॰ तत्पु॰

अन्यथा—अ॰ Otherwise, [अन्य+थाल्]

अन्येद्युः—अ॰ Another day. next day. निपातः

अन्विष्य—अ॰ Having sought. अनु+इष+ल्यप्

अपर—त्रि॰ Other, different. न+पर

अपरशशक पुं, The other hare, अपर+शशक, कर्मधा॰

अपराध—पूं॰, Offence fault. अप+राध+घञ्

अपराधिन्—त्रि॰ One who has committed a Fault or crime. अपराध+इनि

अपरीक्ष्य—अ॰ Without examining. न+परि+ईक्ष+ल्यप्

अपसृ—धा॰ To fly away to be off. अप+सृ+ अपसरति, अपससार

अपसारित—त्रि, Done out, turned out अप+सृ+णिच्+क्त

अपहृ—धा. To steal, to take away. अप+हृ अपहरति, अपजहार &c.

अपि—अ॰ even, yet, whether.

अपूप—पुं॰ A cake of flour, meal.

अभिमानिन्—त्रि॰ Proud. arrogant. अभिमान +इनि

अभ्यस्त—त्रि॰ Practised. अभि+अस् to throw +क्त

अमधुर—त्रि॰ Not sweet. नञ्+मधुर

अमृत—न॰ Ambrosia, nectar. नञ्+मृङ्+क्त

अये—अ॰ Oh! Ah! In mild speech.

अयि—अ॰ O? In mild address.

अरिः—पुं॰ enemy

अरे—अ॰ O? Ho? In calling inferiors.

अरोग—त्रि॰ Hale, Healthy. । नञ्+रोग, बहु॰ ।

अर्चितुम्=अ॰ In order to worship or treat.

with respect. । अर्च् + तुमुन् ।

अर्जित + त्रि, Earned, Gained. Acquired. । अर्ज् + त ।

अर्द्ध + पुं, न, Half.

अर्पण + न, To give, to make over, to dedicate.

अलम् + अ, That is all, fit, end, no more.

अल्प + त्रि, Little, short, small.

अल्पाशय + त्रि, Narrow minded. । अल्प + आशय, बहु० ।

अवगम् धा. To know to obtain, अव + गम्. अवगच्छति &c. Passive अवगम्यते &c.

अवलोक्य अ. Having seen. अव + लोक् + ल्यप् ।

अवशिष्ट – त्रि. Remaining; that is left. अव + शिष् + क्त

अश्व पुं, Horse.

अष्टादश त्रि. eighteen. अष्टन् + दशन्

असमर्थ त्रि. Unfit, unable, without power नञ् समर्थ

असम्बद्ध त्रि. Unconnected, unconcerned. नञ् + सम् + बन्ध् + क्त

असि क्रि. Thou art When Noun = a Sword अस्

to be + मि ।

अस्ति क्रि, He is. अस् to be + ति

अस्तु क्रि. Let it be, Be it so. अस to be + तु

अस्थिखण्ड पुं. न. A piece of bone. अस्थि + खण्ड. तत्पु०

अस्मत्प्रतिवेशिनी — स्त्री. My or our female neighbour. अस्मद् + प्रतिवेशिनी. तत्पु०

अस्मिन्मन्दिर न. Our temple. अस्मद् + मन्दिर तत्पु

अस्मि क्रि. I am. [ प्र० I ] अस् to be + मि.

अहम् त्रि. I. Same in all genders. अस्मद Nom. Sing.

अहो अ. Oh? Ah? alas?

आकार्य अ. Having called. अङ् + क्र + णिच् + ल्यप्

आकृति स्त्री. Appearance. आङ् + कृ + क्तिन्

आकृष्य अ. Having pulled or dragged. आङ् + कृष् + ल्यप्

आगत्य अ. Having come. आङ् + गम् + ल्यप्

आगन्तुम् अ. In order to come. आङ् + गम् + तुमुन्

आग्रह पुं. Egerness, Favour, Seazing Surpassing. आङ् + ग्रह् + अप्

आच्छन्न—त्रि. Covered. आङ्+छद्+क्त

आत्मन्—पुं. Soul. sprit, life, body. आङ्+गम् मनिन्

आदरवचन—न. Word of respect. आदर+वचन. तत्पु०

आदाय—अ. Having taken. आङ्+दा+ल्यप्

आनी—धा. To bring. आङ्+नी.+आनयति &c.

आनीत—त्रि. Brought. आङ्+नी+क्त

आपद्—स्त्री. Calamity. आङ्+पद्+क्विप्

आपन्न—त्रि. Obtained, acquired, afflicted. आङ्+पद्+क्त

आपेदे—क्रि. Not obtained आङ्+पद्+लिट् 3rd P. S.

आभीर—त्रि. A cowherd. आङ्+अभि+इर्+अच्

आम्र—पुं. The mango tree; न. The mango fruit. अम्+रक्

आम्रफल—न. The mango fruit. आम्र+फल तत्पु,

आयात त्रि. Came is come. आङ्+या+क्त

आरब्धवत्—त्रि. Has begun. आङ्×रभ्×क्तवत्

आराध्—धा. To worship, to serve, to adore. आङ्×राध्

आरुह्य—अ. Having climbed, mounted or ascended. आङ् × रुह् × ल्यप्

आरूढ़—त्रि. Sitting, upon mounted. आङ् × रुह् × क्त × कर्तृ०

आरेभे—क्रि. Began. आङ् × रभ् × लिट् 3rd S. P.

आरोपितवत्—त्रि. Has made to climb or to mount आङ् × रुह् × णिच् × क्तवत्

आलपत्—धा. To talk to converse. आङ् × लप्

आलपत्—त्रि. Talkingor conversing. आङ् × लप् × शतृ

आलाप—पुं० A talk; आङ् × लप × घञ् ।

आलोक्य—अ. Having seen. आङ् × लोक् × ल्यप् ।

आशा—स्त्री. Hope. आङ् × अश् × अच् × टाप् ।

आसन्नमृत्यु—त्रि. About to die. आसन्न × मृत्यु बहु०

आसादनीय—त्रि. To be obtained obtainable. आङ् × सद् × णिच् × अनीय

आसादित्—त्रि. Obtained, got. आङ् × सद् × णिच् × त

आस्वादयत्—त्रि. Testing. [Present P.] आङ् × स्वद् × शतृ

आह+क्रि. Says, ब्रू × लोट् 3rd P. S.

आहार—पुं. Food. आङ्+हृ+घञ् ।

आहूय—अ. Having Called. [आङ्+ह्वे+ल्यप्]

इच्छति—क्रि He wishes or desires. [इष्+लट् 3rd P. S.]=अभिलषति

इतः—अ From this, through this, hence. [इदम्+तसिल्]

इति—अ The end, that is all [इ+क्तिच्]

इयम्—स्त्री This इदम् F. Nom. S.]=एषा

इव—अ Like, as, so.

इष्टदेव—पुं A tutelary deity. [इष्ट+देव कर्मधा]

इष्टदेवता—स्त्री (देवता अजहल्लिङ्ग) (Same as above)

ईदृश—त्रि Like this, such=एतादृश

उक्त—त्रि Said, told (ब्रू+क्त) [Past Part]=कथित

उक्त्वा—अ Having said (ब्रू-वच् क्त्वा) =कथयित्वा

उच्छिष्ट—त्रि Refuse (adj) Left, rejected. (उत्+शिष्+क्त)

उत्तर—न An answer, a reply. स्त्री The north (उत्+तृ+अप्)

उत्थाप्य—अ Having raised, having lifted. (उत्+स्था+(णिच्+ल्यप्)

उत्पतत्—त्रि Jumping, going up. (press. part.) (उत्+पत्+शतृ =कूर्दमानः

उत्पद्यते—क्रि is produced. ( उत्+पद्+लट्

उत्प्लुत्य—अ Having leaped, Having jumped (उत्+प्लु+ल्यप्) (क)

उदरस्थ—त्रि Down into the stomach.(उदर+स्था+

उद्वहत्—त्रि Bearing, earrying, ( pr. part. )

उद्विग्न—त्रि Filled with anxiety, sorrowful, anxious ( उद् × विज × क्त ) = विकल

उन्नस—त्रि Having a prominent nose. (उत्+नस)

उन्मुच्य—अ Having released, (उत × मुच्+णिच्+ल्यप् )

उपदेश—पुं Advice, instruction. (उप+दिश्+घञ्)

उपद्रव—पुं Tyranny, oppression. (उप × द्रु × अच्)

उपविश्य—अ Having sit ( उप+विश्+ल्यप् )

उपविष्ट—त्रि Being seated, sitting, sat. ( उप × विश् × क्त ) = अवस्थित [ल्यप्)

उपवेश्य—अ Having seated ( उप+विश्+णिच्+

उपस्थित—त्रि Present ( उप+स्था × क्त )

उभ—त्रि Both. = द्वि

उवाच—क्रि ( He ) said ( ब्रू or वच् × लिट् )

एकतः—अ On the one hand, from one, through one side. ( एक × तसिल् )

एकत्र—अ in one, together. ( एक + त्रल् )
एकदा—अ Once upon a time, on a certain day. ( एक + दा )
एकोन—त्रि Short by one. (एक + ऊन )
एकोनविंशशतक—The nineteenth century. ( एकोनविंश + शतक )
एतावत्—त्रि So much, so long. ( एतद् + वति )
एव—अ Only, certainly, indeed.
एवम्—अ Thus, so, certaiuly = इत्थम्
ओदन—न Boiled rice ( उन्द × ल्युट्) = भक्तम्
औषध—न A medicament, a medicinal herb. ( औषधि + अण् )
कः—पुं Who ? ( from किम् mas )
कश्चित्—अ To any one ( चित् & चन are added to किम् when inflected. as, कश्चित्, काश्चित्, कौचन &c ) = कमपि
कण्ठ = पुं Throat. (कण् + ठ) or (कठ + अच्) = गलः
कथञ्चन—अ any how. ( कथम् + चन) ( See कश्चित्
कथम्—अ How ? ( किम् + थमु )
कथयत्—त्रि Saying, narrating, ( कथ + शतृ ) (Pres part. ) = वदत्
कथयित्वा—अ Having said ( कथ + क्त्वा )

कथा—स्त्री Story. tale, fable. ( कथ × अङ् + टाप्)

कथाकुसुम—न A flower of tales, the title of the book. ( कथाकुसुम )

कथित—त्रि Said ( past part. ) ( कथ × क्त ) = उक्त

कदा—अ When ? ( किम् + दा ) = कर्हि

कन्दरः—द्वि A cave, a grotto. [ क × दृ + अप् ]

कपाट—न The leaf, shutter, of fold of a door, [ क + पट् × अण् ] = अरर

कमल—न A lotus. [ कम् + कलच् ] = सरोज

कम्बल—पुं A blanket [ क + बल् + अच् ]

करताड़न—न Clapping. [ कर + ताड़न तत्पु ]

कर्ण—पुं The ear. [ कर्ण + घञ् ] [crowd.]

कलकल=पुं A Confused noise, the buzz of a

कल्पयित्वा—अ Having supposod, having arranged, &c. [ क्लृप् + णिच् + क्त्वा ] = मत्वा

कवि—त्रि learned, wise, a poet. [ कु + इन् ]

कविकोविदकीर्तित=त्रिPraised by poets and learned [ कवि × कोविद + कीर्तित तत्पु ]

कश्चित्—अ Some one, somebody. See कश्चित् व

कस्मिंश्चित्—अ In a certain, In some.

काक—पुं A crow. = वायस

कान्यकुब्जदेश—पुं The country of Kanouj.

कार्तिकिक—पुं Name of the month called. कार्तिक October November.

कार्य—न Work, use, consequence. =कर्मन्

कालान्तर—न Another time, some other time [ अन्य + कालः । नि स ] = समयान्तर

काली—स्त्री Name of a Goddess. = भगवती

कालीमन्दिर—न A temple of Kali [ काली + मन्दिर तत्पु ]

काष्ठभार—पुं A load of wood for fuel. ( काष्ठ + भार तत्पु

किंरूप—त्रि Of what Kind. (किं + रूप. बहु. )

किन्तु—अ. But. = परन्तु

किम्—त्रि. Who ? which ? or what ? also अ. as in किं न पश्यसि ? अथ किम् । &c.

किमपि—अ. Something whatever [किम् and अपि]

कियत्कालम्—क्रि. वि. For aw hile, for sometime, a little, how lolng? &c. [कियत् + काल. बहु.] also त्रि

कीर्तित—त्रि. Praised. [ कीर्त्ति + क्त ] = वर्णित

कुक्कुर—पुं. A dog. [कुक् + कुर् + क] = शुनक

कुञ्ज—पुं.न. A grove. [कु + जन् + ड]

कुतः—अ. Whence ? why ? [किम् + तसिल्]

कुशलप्रश्नानन्तरम्—न. After enquring into health After the usual enquiry about health [कुशल+प्रश्न+अनन्तर. तत्पु.]

कुशलिन्—त्रि, One in health, healthy, well off. [कुशल+इन्]

कुसुम—न A flower. (कुस्+उमक्)=पुष्प

कूजन—न. Cooing, moaning. [कूज्+ल्युट्]

कूप—पुं A well. [कु+पक]=अन्धु

कृत—त्रि Done, made, composed, [कृ+क्त]

कोटिशः—अ. In multitude, by millions. (कोटि+शसि.)

कोमलाङ्ग—त्रि Of tender frame or body. [कोमल+अङ्ग. बहु व्रो.]=सुकुमारावयव

कोविद—त्रि. A learned man. [कु+विद्+क]

कौतुकदर्शनविह्वललालस—त्रि. Eager to see the fun [कौतुक+दर्शन+विह्वल+लालसा बहु]

क्रिया—स्त्री Act, action &c. [कृ+श+टाप्]

क्रियेत—क्रि. If it be done. [कृ Passive लिङ्]

क्रीड़त्—त्रि. Playing. [क्रीड्+शतृ]=खेलत्

क्रीतवत्—त्रि. Has bought. [an adjective in use See Rule] [क्री+क्तवत्]

